॥ श्रीरस्तु ॥

अयं

# भस्मधारणविचारः ।

श्रीकाञ्चीनगरनिवासिभिः श्रीमद्वेदमार्गप्रतिष्ठापनाचार्यैः
श्रीमद्यतिवरपुनरवतारभूतश्रीमद्वरवरमुनिवर-
संस्थापिताष्टदिग्गजमुख्यतमश्रीप्रतिवा-
दिभयङ्करार्यदिव्यसिंहासनासीनैः

श्रीमदनन्ताचार्यस्वामिभिर्विरचितः ।

श्रीकृष्णदासात्मज–गंगाविष्णोः
अध्यक्ष " लक्ष्मीवेंकटेश्वर " मुद्रणालये
पं० शिवदुलारे वाजपेयीत्यनेन स्वाम्यर्थं
मुद्रयित्वा प्रकाशितः ।

शके १८३७, संवत् १९७२

कल्याण–मुंबई.

॥ श्रीहयग्रीवाय नमः ॥
॥ श्रीमते विष्वक्सेनाय नमः ॥
॥ श्रीमते रामानुजाय नमः ॥
॥ श्रीवादिभीकरमहागुरवे नमः ॥

# उपोद्घातः ।

श्रीकाञ्चीनगरनिवासिभिः श्रीमद्वेदमार्गप्रतिष्ठापनाचार्योभयवेदान्तप्रवर्तकाचार्यैः श्रीमत्प्रतिवादिभयंकरार्यदिव्यसिंहासनासीनैरनन्ताचार्यस्वामिभिरियं पत्रिका प्रकटीक्रियते ।

विदितमस्तु तत्रभवतां महतां विद्वच्छिखामणीनाम् ।

षण्णवत्युत्तरनवशताधिकचतुस्सहस्रमिते कलौ दुर्मुखिनामानि संवत्सरे मेषमासे शुक्लपंचम्याम् ( हूणशके १८९६ संवत्सरे एप्रेलमासे १२ दिने) भूपालनगराद्वयमवन्तिकानगरमागता स्मः। ततो द्वित्रदिवसानन्तरमवन्तिकानगरवासी तुलारामनामा पूर्वं श्रीवैष्णवदीक्षाग्रहणपूर्वकोर्ध्वपुण्ड्रादिधारी संप्रति भस्मत्रिपुण्ड्रधारी कश्चन पण्डितोस्मन्निकटमागतोभूत् । तदानीं विदिततदीयपूर्ववृत्तान्तैरस्माभिरूर्ध्वपुण्ड्रं परित्यज्य कथं भस्मत्रिपुण्ड्रधारणं भवता कृतम्। भस्मत्रिपुण्ड्रधारणं हि स्वतोऽश्रेयस्करं शास्त्रे निषिद्धं च वैदिकब्राह्मणानामित्युक्तस्स तुलारामनामा केवलदुराग्रहेण न कुत्रचित्किंचिदपि वा भस्मत्रिपुण्ड्रधारणनिषेधकवचनमुपल-

भ्यते शास्त्रे। प्रत्युतोर्ध्वपुण्ड्रधारणनिषेधकवचनान्येव च बहुलमुपलभ्यन्ते। तानि च नेदानीं कण्ठस्थानि किन्तु पत्रिकायां विलिख्य प्रेषयिष्यन्ते । यदि च भस्मत्रिपुण्ड्रधारणनिषेधकवचनानि सन्ति तर्हि तान्युच्यन्तामित्यवदत् । ततश्चास्माभिस्तदीयदुराग्रहानिर्मूलनप्रवृत्तैरित्थमुपन्यासः कृतोभूत् ।



॥ श्रीः ॥

अथ

# भस्मधारणविचारः ।

## भस्मनः स्वतोऽशुद्धत्वात्तद्धारणस्य निषिद्धत्वाच्च न वैदिकब्राह्मणानां भस्मधारणं न्याय्यम् ।

तथाहि । "उच्छिष्टकेशभस्मास्थि कपालं मलमेव च । स्नानार्द्रधरणीं चैव स्पृष्ट्वा स्नानं समाचरेत् ॥" इति वृद्धहारीतसंहिताषष्ठाध्यायवचने मलाद्यशुद्धद्रव्यैः सह भस्मनोपि ग्रहणान्मलादिस्पर्श इव भस्मस्पर्शेपि स्नानविधानाच्चात्यन्ताशुद्धमलादिसादृश्यान्मलादिकमिव भस्मापि स्वतोशुद्धमिति विज्ञायते ।

एवं "दीपाग्निं दीपतैलं च भस्म चास्थि रजस्वलाम् । एतानि ब्राह्मणः स्पृष्ट्वा सवासा जलमाविशेत् ॥" इति वैद्यनाथदीक्षितीयाह्निकग्रन्थधृतशङ्खस्मृतिवचनेपि रजस्वलादिस्पर्श इव भस्मस्पर्शेपि सचेलस्नानरूपप्रायश्चित्तविधानादपि भस्मनोऽशुद्धत्वं लभ्यते ।

अत एव शङ्खसंहितायां सप्तमाध्याये—" चन्दनैर्लिप्यतेऽङ्गं वा भस्मचूर्णैर्विगर्हितैः । " इति वचने भस्मचूर्णस्य विशेषेण गर्हितत्वोक्तिरपि सङ्गच्छते ।

किंच, " येषां गृहान्तरे नित्यं कलहः संप्रवर्तते । तत्ते स्थानं प्रयच्छामो वस तत्राशुभान्विता ॥ ये दुष्टभाषणा नित्यं वदन्त्यप्यनृतं सदा । तेषां वेश्मनि संतिष्ठ दुःखदारिद्र्यदा सदा ॥ कपालकेशभस्मास्थितुषाङ्गाराणि यत्र वै । तत्र ते सततं स्थानं भविष्यति न संशयः ॥ यस्य देहे कपालास्थिभस्मकाचादि दृश्यते । तं भजस्वाशुभे नित्यं कलिना सह सर्वदा ॥ " इत्यादिभिः पाद्मपुराणोत्तरखण्डे क्षीराब्धिमथनकालप्रथमोत्पन्नज्येष्ठादेवीस्थाननिरूपणावसरे भस्माधिकरणस्यापि ज्येष्ठादेवीस्थानत्वोक्त्यापि भस्मनोऽतिनिन्दितत्वं सुगमम् । यद्यपि मुद्रितपाद्मपुराणपुस्तके ब्रह्मखण्डे दशमाध्याये–" येषां नृणां गृहे देवि कलहः संप्रवर्तते । तत्र स्थानं प्रयच्छामो वस ज्येष्ठेऽशुभान्विता ॥ निष्ठुरं वचनं ये च ये वदन्त्यनृतं नराः । संध्यायां ये हि चाश्नन्ति दुःखदा तिष्ठ तद्गृहे ॥ कपालकेशभस्मास्थितुषाङ्गाराणि यत्र तु । स्थानं ज्येष्ठे तत्र तव भविष्यति न संशयः ॥ " इति उत्तरखण्डे द्वात्रिंशदुत्तरद्विशततमाध्याये–" येषां गृहान्तरे रम्ये कलहः संप्रवर्तते । तत्ते स्थानं प्रयच्छामो वस तत्राशुभान्विता ॥ परुषं भाषणं नित्यं वदन्त्यनृतवादिनः । सन्ध्याकाले तु ये पापाः स्वपन्ति मलचेतसः ॥ तेषां वेश्मनि सन्तिष्ठ दुःखदारिद्र्यदायिनी । कपालकेशभस्मास्थितुषाङ्गाराणि यत्र वै ॥ तत्र ते सततं स्थानं भविष्यति

न संशयः । यस्य वेश्म कपालास्थिभस्मकेशादिचिह्नितम् ॥ वस तत्राशुभे नित्यं कलिना सह नित्यशः ” इति च पाठो दृश्यते । सर्वथापि भस्माधिकरणस्य ज्येष्ठादेवीस्थानत्वं तु निर्विवादम् ।

तस्मात्स्वतोशुद्धस्याश्रीकरस्य प्रायश्चित्तावहस्पर्शस्य भस्मनो वैदिकब्राह्मणधार्यत्वं कथंचिदापि न सम्भवति । एवं पाद्मोत्तरखण्डे प्राचीनपुस्तके चत्वारिंशाध्यायतया मुद्रितपुस्तके पंचत्रिंशोत्तरद्विशततमाध्यायतया च परिगणितेध्याये– “कपालभस्मास्थिधरा ये ह्यवैदिकलिङ्गिनः । ऋते वनस्थाश्रमाच्च जटावल्कलधारिणः ॥ अवैदिकक्रियोपेतास्ते वै पाषण्डिनः स्मृताः ॥” इति भस्मधारिणां पाषण्डित्वं वर्णितम् । पाषण्डिनां चादृश्यत्वास्पृश्यत्वादिकं तत्रैव तत्पूर्वाध्याये–“ पाषण्डिनं विकर्मस्थं पतितं श्वपचं तथा । नावलोकेन्न संभाषेन्न स्पृशेच्चैव वैष्णवः ॥ ” इति प्रतिपादितम् । वृद्धहारीतसंहितायां षष्ठाध्याये च–“ रजस्वलां सूतिकां च चण्डालं पतितं तथा । पाषण्डिनं विकर्मस्थं शवं स्पृष्ट्वाप्यकामतः ॥ गोमयेनानुलिप्ताङ्गः सवासा जलमाविशेत् । गायत्र्यष्टशतं जप्त्वा घृतं प्राश्य विशुद्ध्यति ॥ ” इति पाषण्डिनामकामतः स्पर्शे गोमयानुलेपपूर्वकसचेलस्नानादिरूपं प्रायश्चित्तमपि वर्णितम् । एवं श्रीविष्णुपुराणतृतीयांशषष्ठाध्यायादिष्वपि पाषण्डिनामस्पृ-

श्यत्वादिकं वर्णितं द्रष्टव्यम् । पाषण्डित्वं च भस्मधारणप्रयुक्तमपीति पूर्वोक्तपाद्मपुराणव्यचनेनैव सुव्यक्तम् । तथाचादृश्यत्वास्पृश्यत्वादिहेतुपाषाण्डित्वप्रयोजकभस्मधारणस्य वैदिकब्राह्मणावश्यकत्वं कथंचिदपि न सम्भवितुमर्हति ।

किञ्च “ अधितिष्ठेन्न केशांस्तु न भस्मास्थिकपालिकाः । ” इति मनुस्मृतिचतुर्थाध्यायवचनेन “ विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम् । केशभस्मतुषाङ्गारकपालेषु च संस्थितिम् ॥ ” इति याज्ञ्यवल्क्यस्मृतिप्रथमाध्यायवचनेन ॥ न केशतुषकपालास्थिभस्माङ्गारानिति विष्णुस्मृतित्रिषष्टितमाध्यायवचनेन ॥ न भस्मकेशतुषकपालान्यधितिष्ठेदिति वृद्धगौतमसंहितानवमाध्यायवचनेनान्यैश्चैतादृशैर्वचनैः । “दीपाग्निं दीपतैलं च भस्म चास्थि रजस्वलाम् ॥ एतानि ब्राह्मणः स्पृष्ट्वा सवासा जलमाविशेत् ॥ ” इति वैद्यनाथदीक्षितीयाह्निकग्रन्थस्मृतिरत्नाकरसच्चरित्ररक्षादिग्रन्थधृतशङ्खस्मृतिवचनेन । “ उच्छिष्टकेशौ भस्मास्थिकपालं मलमेव च । स्नानार्द्रधरणीं चैव स्पृष्ट्वा स्नानं समाचरेत् ॥ ” इति वृद्धहारीतसंहिताषष्ठाध्यायवचनेन— “ केशास्थिकण्टकामेध्यबलिभस्मतुषांस्तथा । स्नानार्द्रधरणीं चैव दूरतः परिवर्जयेत् ॥ ” इति विष्णुपुराणतृतीयांशद्वादशाध्यायवचनेनान्यैश्चैतादृशैर्वचनैः परस्परमेककण्ठतामापन्नैरस्पृश्यतयोक्तस्य भस्मनो वैदिकब्राह्मणजनधार्यत्वं न कश्चिदपि प्रमाणशरणो वक्तुमर्हति ।

अत एव हि तादृशभस्मधारणाद्धेतोर्याज्ञ्यवल्क्यस्मृतितृतीयाध्यायत्रिंशश्लोकव्याख्यानावसरे विज्ञानेश्वरेण—"शैवान्पाशुपतान् स्पृष्ट्वा लोकायतिकनास्तिकान् । विकर्मस्थान्द्विजांश्शूद्रान्सवासा जलमाविशेत् ॥" इति ब्रह्माण्डवचनमुदाहृत्योदक्यादीनामिव शैवादीनामपि तत्स्पृष्टिन्यायेनास्पृश्यत्वमुक्तम् ।

किंच "कुलीनो ब्राह्मणो विद्वान्भस्मधारी भवेद्यदि । वर्जयेत्तादृशं देवि मद्योच्छिष्टघटं यथा ॥" इति प्राचीनानेकनिबन्धनकारोदाहृतवराहपुराणवचने । "ब्राह्मणः कुलजो विद्वान् भस्मधारी भवेद्यदि । वर्जयेत्तादृशं देवि मद्योच्छिष्टघटं यथा ॥" इति पाद्मोत्तरखण्डपंचविंशोत्तरद्विशततमाध्यायवचने च । भस्मधारिकुलीनब्राह्मणस्य मद्योच्छिष्टघटस्येव वर्जनीयत्वमुक्तम् । अत्र ब्राह्मणस्य कुलीनत्वकथनं आहिताग्निर्नानृतं वदेदितिवद्दोषभूयस्त्वप्रयुक्तम् । नत्वकुलीनब्राह्मणस्यावर्जनीयत्वसूचनार्थम् । अग्निवेश्यगृह्ये—"त्रिपुण्ड्रं ब्राह्मणो विद्वान् लीलयापि न धारयेत् । धारयेत्प्रयतः सम्यगूर्ध्वपुण्ड्रं प्रयत्नतः ॥" इति भस्मत्रिपुण्ड्रस्याधार्यत्वमुक्तम् । बोधायनस्तु—"होमपूजादिसमये सायंप्रातः समाहितः । ऊर्ध्वपुण्ड्रधरो विप्रो भवेच्छुद्धो न चान्यथा ॥" इति तिर्यक्पुण्ड्रधारिणोऽशुचित्वमाह । अन्यथेत्यनेनोर्ध्वपुण्ड्राधारणत्रिपुण्ड्रधारणयोरुक्तत्वात् । वर्णयति च वृद्धजाबालिः—"शस्त्रधार्यसिधारी च धनुर्धारी धनापहः ।

तिर्यक्पुण्ड्रधरो विप्रः स चण्डालसमो भवेत् ॥ " इति तिर्यक्पुण्ड्रधारिणश्चण्डालसमत्वम् । शातातपस्तु–" त्रिपुण्ड्रं ब्राह्मणो विद्वान् लीलयापि न धारयेत् । त्रिपुण्ड्रधारणाद्विप्रः पतत्येव न संशयः ॥ " इति त्रिपुण्ड्रधारणाद्विप्रस्य पातित्यं ब्रवीति ॥ वृद्धहारीतसंहितायां द्वितीयाध्याये " न भस्म धारयेद्विप्रः परमापद्गतोपि वा । मोहाद्वै बिभृयाद्यस्तु स सुरापो भवेद्ध्रुवम् ॥ " तिर्यक्पुण्ड्रधरं विप्रं पट्टाकारधरं तथा । श्वपाकमिव वीक्षेत न सम्भाषेत कुत्रचित् ॥ " इति भस्मनोऽधार्यत्वं मोहाद्धारयितुः सुरापसदृशत्वं तिर्यक्पुण्ड्रधारिविप्रस्य श्वपाकस्येवासम्भाष्यत्वम् । " धारयेन्न तिर्यक्पुण्ड्रमापद्यपि कदाचन । तिर्यक्पुण्ड्रधरं विप्रं चण्डालमिव सन्त्यजेत् ॥ सोनर्हः सर्वकृत्येषु सर्वलोकेषु गर्हितः ॥ " इति तिर्यक्पुण्ड्रस्यापत्कालेप्यधार्यत्वं तद्धारिणः सर्वकर्मानर्हत्वं सर्वलोकगर्हितत्वं चोक्तम् । पराशरस्मृत्युत्तरखण्डे द्वितीयाध्याये -"कपालकेशभस्मास्थिशुक्तिपाषाणधारिणम् । त्रिपुण्ड्रधारिणं विप्रं चण्डालमिव सन्त्यजेत् ॥ " इति कपालादिधारिण इव भस्मत्रिपुण्ड्रधारिणोपि चण्डालवत्परित्याज्यत्वम् । " अग्निदं गरदं चैव लिङ्गपाषाणधारिणम् । तिर्यक्पुण्ड्रधरं विप्रं राजा राष्ट्रात्प्रवासयेत् ॥ " इति गरदादीनामिव तिर्यक्पुण्ड्रधरस्यापि राष्ट्रा-

१ म्वर ।

त्प्रवास्यत्वम्। " तिर्यक्पुण्ड्रधरो विप्रः पङ्क्तिमध्ये स्थितो यदि। सा पङ्क्तिर्ब्रह्महत्यायां योज्यते नात्र संशयः॥" इति तिर्यक्पुण्ड्रधरघटितविप्रपंक्तेर्ब्रह्महत्याभाक्त्वम्। " तिर्यक्पुण्ड्रधरो विप्रो यत्र तिष्ठति दुर्मतिः। स देशः पापसम्भूतिः श्मशानसदृशो भवेत्॥" इति तिर्यक्पुण्ड्रधार्यधिकरणदेशस्य श्मशानसदृशत्वम्। " ब्राह्मणः कुलजो विद्वांस्तिर्यक्पुण्ड्रधरो यदि। तं गर्दभं समारोप्य राजा राष्ट्रात्प्रवासयेत्॥" इति तिर्यक्पुण्ड्रधारिणः सत्कुलप्रसूतस्य ब्राह्मणस्य गर्दभारोपणपूर्वकराष्ट्रप्रवासरूपविशेषदण्डभाक्त्वं चोक्तम्। तस्मात्पातित्यास्पृश्यत्वाभाष्यत्वादिप्रयोजकं बहुतरप्रमाणगणनिषिद्धं भस्मत्रिपुण्ड्रधारणं वैदिकब्राह्मणानामयुक्तमेव। एवं " ततः शशाप तांत्सर्वानृषिः परमकोपनः। गौतमस्तपतां श्रेष्ठः सामगानां परस्तथा॥ निर्दोषाय यथा मह्यं मायां गोरूपधारिणीम्। कृतवन्तस्तथा सर्वे त्रयीं त्यक्ष्यथ पापिनः॥ त्रिपुण्ड्रधारिणो नित्यं भस्मोद्धूलनतत्पराः। भविष्यथ त्रयीबाह्या मिथ्याज्ञानप्रलापिनः॥" इत्यादित्यपुराणवचनैः। " गोवध्याकरणं मह्यं यावत्पश्यति गौतमः। ऋषीणां मायया सर्वमिदं जातं विचिन्त्य वै॥ शशाप ताञ्जटाभस्ममिथ्याव्रतधरास्तथा। भविष्यथ त्रयीबाह्या वेदकर्मबहिष्कृताः॥" इति वराहपुराणैकसप्ततितमाध्यायवचनैश्च पूर्वं वैदिकानामेव सतां

गौतमशापेन भस्मधारित्वादिलक्षणवेदबाह्यत्वप्राप्तिरभूदिति ज्ञायते । उभयत्रापि भस्मोद्धूलनतत्परा इत्यादेर्वेदबाह्यत्वोपपादकत्वेन भस्मादिधारणस्य वेदबाह्यलक्षणत्वं चावगतं भवति । तदेतादृशवेदबाह्यलक्षणभस्मादिधारणं न वैदिकानां कर्तुं शक्यम् । तथा सत्यवैदिकत्वापत्तेः । तस्य शांभवव्रताद्यङ्गत्वेपि " भवव्रतधरा ये च ये च तांत्समनुव्रताः । पाषण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिनः ॥ नष्टशौचा मूढधियो जटाभस्मास्थिधारिणः । विशन्तु शिवदीक्षायां यत्र दैवं सुरासवम् ॥ " इति श्रीभागवतचतुर्थस्कन्धद्वितीयाध्यायवचनैर्भृगुशापेन भस्मादिधारणाङ्गकशांभवव्रतादिनिष्ठानां पाषण्डित्वप्राप्तिलाभेन—" दंभिहैतुकपाषण्डिबकवृत्तींश्च वर्जयेदिति " याज्ञवल्क्यस्मृत्याचाराध्यायवचनोक्तप्रकारेण सकलकर्मानर्हत्वहेतुपाषण्डित्वप्रयोजकभवव्रतादीनामपि वैदिकब्राह्मणैः परित्याज्यतया तदङ्गतयापि वैदिकब्राह्मणानां भस्मधारणाप्राप्तेश्च ।

न चाथर्वशिरसि अग्निरिति भस्मेत्यारभ्य अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेदित्यन्तेन कालाग्निरुद्रोपनिषदि अग्निरिति भस्मेत्यारभ्य तिर्यक् तिस्रो रेखाः प्रकुर्वीतेत्यन्तेन च भस्मनो धार्यत्वोक्त्या भस्मधारणनिषेधपरपूर्वोक्तस्मृत्यादिवचनानामुक्तश्रुतिविरोधेन न प्रमाणतासम्भवः । विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानमित्यत्र पूर्वमीमांसायां

श्रुतिस्मृत्योर्विरोधे स्मृतेरप्रमाणताया निर्णीतत्वात् । " श्रुति-स्मृत्योर्विरोधे तु श्रुतिरेव बलीयसी । अविरोधे तदा कार्यं स्मार्तं वैदिकवत्सदा ॥ " इति लोकाक्षिवचनेन श्रुतिस्मृत्योर-विरोधे सत्येव स्मृतिप्रमाणताया बोधनाच्च । नच यदि श्रुत्यविरोधे सत्येव स्मृतीनां प्रामाण्यम् तदा श्रुत्यैव चारितार्थ्ये स्मृतीनां निरर्थकतेति वाच्यम् । श्रुत्या तत्तत्कर्मबोधनेपि सेतिकर्तव्यताकनानाविधानन्तकर्मविशद-तमबोधांशे स्मृतीनामुपयोगेन सार्थक्यात् इति वाच्यम् । विरोधे त्वनपेक्ष्यं स्यादित्यत्र श्रुतिस्मृत्योरपरिहार्यविरोधे सत्ये-व स्मृतेरप्रमाणताया निर्णीतत्वेन प्रकृते भस्मधारणविधायक-तन्निषेधकश्रुतिस्मृत्योः पाशुपतादितान्त्रिकवैदिकब्राह्मणरूप-विषयभेदस्योक्तश्रुत्याऽमूलाग्रार्थपर्यालोचनेनैव सिद्धेर्वक्ष्यमाण-रीत्या विरोधपरिहारसम्भवेन दोषाभावात् । तथाहि अथर्वशि-रसि अग्निरित्यादिना भस्मधारणविधानं पाशुपततान्त्रिकविष-यम् । तत्रैवोत्तरत्र तस्माद्व्रतमेतत्पाशुपतमिति निगमनदर्शनेन भस्मधारणस्य पाशुपतव्रताङ्गतालाभेन तद्व्रतनिष्ठमात्रविषयत्व-सिद्धेः । कालाग्निरुद्रोपनिषद्यपि न सर्वसाधारण्येन भस्मधारणं विधीयते । किन्तु शाम्भवव्रतनिष्ठमात्रस्यैव तद्व्रताङ्गतया विधीयते व्रतमेतच्छाम्भवमिति तत्राप्युत्तरत्र निगमनवाक्यद-र्शनात् पूर्वोपदाशतः स्मृत्यादिवचनानि च वैदिकमुमुक्षुब्राह्म-

णानां भस्मधारणनिषेधपराणि । तथाचोक्तश्रुतिस्मृत्योर्विरोधस्योक्तरीत्या परिहारसम्भवेन स्मृतीनां प्रामाण्याद्वैदिकब्राह्मणानां भस्मधारणं न सम्भवत्येव । एवमेवाविरोधः स्मृत्यादिष्वप्युलभ्यते । तत्र वृद्धहारीतसंहितायां द्वितीयाध्याये-" रुद्रार्चनं त्रिपुण्ड्रस्य धारणं यत्र दृश्यते । तच्छूद्राणां विधिः प्रोक्तो न द्विजानां कदाचन ॥ " इति रुद्रार्चनात्रिपुण्ड्रधारणविध्योः शूद्रमात्रविषयत्वमुक्तम् । यद्यप्यत्र त्रिपुण्ड्रधारणस्य द्विजसामान्यविषयत्वाभावो लभ्यते तथापि " शिवार्चनं त्रिपुण्ड्रं च शूद्राणान्तु विधीयते । तद्विधानामिदं ये च विप्राः शिवपरायणाः ॥ " इति तृतीयाध्यायवचने शूद्रतत्सदृशशिवपरायणपाशुपतादितान्त्रिकोभयविषयत्वलाभेन तदनुरोधेनात्रत्यद्विजपदस्य वैदिकद्विजपरत्वाश्रयणेन पाशुपतादितान्त्रिकद्विजापशूद्रादिविषयत्वलाभो भवति । इदमेव पाद्मोत्तरखण्डे पञ्चविंशोत्तरद्विशततमाध्यायेप्युक्तम्-" त्रिपुण्ड्रं शूद्रकल्पानां शूद्राणां च विधीयते । त्रिपुण्ड्रधारणाद्विप्रः पतितः स्यान्न संशयः ॥ " इति । अत्र च शूद्रकल्पानामित्यनेन शूद्रसदृशाः वृद्धहारीतसंहितातृतीयाध्यायोक्तशिवपरायणपाशुपतादितान्त्रिका गृह्यन्ते । ब्रह्मरात्रे " ब्राह्मणस्योर्ध्वपुण्ड्रं स्यात् क्षत्रियस्यार्धचन्द्रकम् । वैश्यस्य वर्तुलाकारं शूद्रस्यैव त्रिपुण्ड्रकम् ॥ " इति शूद्रस्यैव त्रिपुण्ड्रधारणमुक्तम् । यद्यप्यत्र क्षत्रि-

यादीनामर्धचन्द्राद्याकारपुण्ड्रधारणमुक्तम् तथापि " सर्ववर्णेषु मद्भक्ताः कुर्वीरन्नूर्ध्वपुण्ड्रकम् । " इति ब्रह्माण्डवचनादिभिर्वैष्णवानां क्षत्रियादीनामप्यूर्ध्वपुण्ड्रधारणमेव प्राप्तम् ।

" तस्मात्सर्वप्रयत्नेन त्रिपुण्ड्रं वर्जयेद्द्विजः । तच्छम्भुव्रतनिष्ठानां नेतरेषां कदाचन ॥" इति नारदस्मृतिवचनेनापीदं सुव्यक्तम् । तच्छम्भुव्रतनिष्ठानां नेतरेषामिति शम्भुव्रतनिष्ठभिन्नानां सर्वेषामपि त्रिपुण्ड्रधारणाभावस्याविशेषेण प्रतिपादनात् । तथा सति द्विजानां तदभावस्य कैमुतिकन्यायसिद्धत्वात् इति ॥ एवमन्येषामपि वचनानामुक्तरीत्यैवार्थः । तस्माद्वैदिकब्राह्मणानां भस्मत्रिपुण्ड्रधारणं न सम्भवत्येव । किञ्च " विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् । " इत्यत्र निर्णीतं स्मृत्यप्रामाण्यं स्वतो निश्चेयार्थप्रत्यक्षश्रुतिस्थल एव नतु सन्दिग्धार्थकश्रुतिस्थलेपि । परमाप्ततमपरमर्षिप्रणीतस्मृत्यादिभिरेव श्रुत्यर्थनिर्णयस्य कर्तव्यतायाः " प्रायेण पूर्वभागार्थपूरणं धर्मशास्त्रतः । इतिहासपुराणाभ्यां वेदान्तार्थः प्रकाश्यते ॥ अधीत्य चतुरो वेदान्न सषडङ्गपदक्रमान् । स्मृतिहीना न शोभन्ते चन्द्रहीनेव शर्वरी ॥ स्मृतिं विना न विज्ञानं धर्मस्य भवति क्वचित् । न जातु ज्ञायते रूपमादर्शेन विना यथा ॥ इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥ " इत्यादिभिरुक्ततयाऽर्थनिर्णायकस्मृत्यादीनां तादृशस्थलेष्वप्र-

माणताया अशक्यवचनत्वात् । तथाच पूर्वोदाहृताथर्वशिरआदिवचनेषु ब्राह्मणादिपदाभावात् मातापितृसहस्रेभ्योपि वत्सलतरे शास्त्रे " अग्नेर्भस्मास्यग्नेः पुरीषमसीति " तैत्तिरीयवाक्यप्रतिपन्नाग्निपुरीषत्वस्य भस्मनोतिनिन्दितस्य वैदिकब्राह्मणादिसाधारण्येन विधानासंभवाच्चार्थस्य सन्दिग्धतया पूर्वोक्तस्मृत्यादिवचनानुगुण्येन सर्वेषामपि श्रुतिवाक्यानां पूर्वोक्तार्थपरतैव युक्ता । एवं सत्येव च स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गादित्युत्तरमीमांसाद्वितीयाध्यायप्रथमपादप्रथमसूत्रमपि सङ्गच्छते । अन्यथोक्तसूत्रस्यैवानवतारप्रसङ्गेनासाङ्गत्यापत्तेः तत्र हि वेदान्तवाक्यानि न ब्रह्मकारणत्वपराणि अपि त्वन्यपराणि । अन्यथा कपिलस्मृतिविरोधप्रसङ्ग इति स्मृत्यनवकाशेत्यादिना पूर्वपक्षीयत्वान्यायानुगृहीतमन्वादिस्मृत्यनवकाशरूपदोषप्रसङ्गान्यायाननुगृहीतकपिलस्मृतिविरोधस्याकिञ्चित्करतया वेदान्तवाक्यानि ब्रह्मकारणत्वपराण्येवेति । नान्यस्मृत्यनवकाशदोषप्रसङ्गादित्यनेन सिद्धान्तितम् । सन्दिग्धश्रुतिस्थलेपि यदि स्मृतीनामप्रमाणतातदोक्तपूर्वपक्षावतार एव न सम्भवति विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानमिति पूर्वमीमांसायामेव श्रुतिविरोधे स्मृतीनामप्रमाणताया निर्णीततया कपिलस्मृतिविरोधेन वेदान्तवाक्यानां ब्रह्मकारणत्वपरत्वासम्भवाऽऽशङ्काया एवानुदयात् उक्तार्थपरत्वे तु विरोधे-

त्विति सूत्रेण औदुम्बरीं स्पृष्ट्वोद्गायेत् ॥ इत्यादि स्वतो निश्चेयार्थश्रुतिविरोधेन " औदुम्बरी सर्वा वेष्टयितव्या " इत्यादिस्मृतीनामप्रमाणताया निर्णीतत्वेपि वेदान्तवाक्यानां स्वतोर्थनिश्चयासम्भवेन सन्दिग्धार्थतयोपबृंहणै रेवार्थनिर्णयस्य कर्तव्यतयोपबृंहणकापिलस्मृतिविरोधेन वेदान्तवाक्यानां न ब्रह्मकारणत्वपरत्वसम्भव इति विशेषाशङ्कासम्भवेन पूर्वपक्षोत्थानसङ्गतिरिति न सूत्रासङ्गतिः । उक्तं च भगवता भाष्यकारेणोक्तसूत्रव्याख्यानावसरे–" प्रथमं तावत्कपिलस्मृतिविरोधाद्वेदान्तवाक्यानामतत्परत्वमाशङ्क्य निराक्रियते । " कथं स्मृतिविरोधाच्छ्रुतेरन्यपरत्वम् उक्तं हि " विरोधे त्वनपेक्ष्यं स्यात् " इति श्रुतिविरुद्धायाः स्मृतेनादरणीयत्वम् । सत्यम् । " औदुम्बरीं स्पृष्ट्वोद्गायेत् " इत्यादिषु स्वत एवार्थनिश्चयसम्भवेन तद्विरुद्धा स्मृतिरनादरणीयैव । इह तु वेदान्तबोध्यतत्वस्य दुरवबोधत्वेन परमर्षिप्रणीतस्मृतिविरोधे सत्ययमर्थ इति निश्चयायोगात्स्मृत्याश्रुतेरतत्परत्वोपपादनमविरुद्धमिति ।

भस्मधारणनिषेधकस्मृत्यादीनामिव तद्विधायकस्मृत्यादीनामपि सत्वात्कथमुक्तस्मृत्याद्यानुगुण्यमात्रानुरोधेन तादृशश्रुतेः पूर्वोक्तार्थनिर्णय इति तु नाशङ्कनीयम् । भस्मधारणविधायकवचनसत्त्वेपि तेषामवैदिकपाशुपतादितान्त्रिकापशूद्रादिविषये सावकाशत्वेन तन्निषेधकवचनानामुक्तश्रुतेरुक्तार्थपरत्वाभावे

निरवकाशत्वप्रसङ्गेन तत्तच्छ्रुतिघटकनिगमनवाक्यानुरोधेन च पूर्वोक्तार्थपरताया एवावश्यकत्वात् । इत्थं चोक्तस्मृत्यादिवचनानामपि प्रामाण्यस्य दुरपह्नवतया वैदिकब्राह्मणानां भस्मत्रिपुण्ड्रधारणं न युक्तमित्येव सिद्धम् ।

किं बहुना । भस्मधारणस्य वेदबाह्यलक्षणत्वं श्रुतिविरुद्धत्वं पातित्यप्रयोजकत्वं च सर्वज्ञेन रुद्रेणैव कथितमिति नात्र कस्यचिदल्पज्ञस्य दुराग्रहमूलकं वचनं केनाचिदुपादेयम् । तथाहि पाद्मोत्तरखण्डे पञ्चत्रिंशदुत्तरद्विशततमाध्याये-"पार्वत्युवाच । भगवन्परमं गुह्यं पृच्छामि सुरसत्तम । मयि प्रीत्या समाचक्ष्व संशयो वर्तते भृशम् ॥ कपालभस्मचर्मास्थिधारणं श्रुतिगर्हितम् । तत्त्वया धार्यते देव गर्हितं केन हेतुना ॥ स्त्रीचापल्येन देवेश पृच्छामि त्वां महामते । महानुभावचरितं न वक्तव्यं महेश्वर ॥ त्वयाचरितमित्येतद्वक्तव्यं शङ्कर प्रभो । अकर्तव्यमपि प्रश्नं क्षन्तुमर्हसि मे प्रभो ॥ वसिष्ठ उवाच । इति देव्या हरः पृष्टो रहस्ये जनवर्जिते । उवाच परमं गुह्यं यद्यदाचरितं स्वकम् ॥ शिव उवाच । शृणु देवि प्रवक्ष्यामि यद्गुह्यं परमाद्भुतम् । न वक्तव्यं त्वया देवि जनेषु कथितं मया ॥ अपृथक्त्वाच्छरीरस्य वक्ष्यामि तव सुव्रते । नमुच्याद्या महादैत्याः पुरा स्वायंभुवेन्तरे ॥ महाबला महावीर्या महावीरा महौजसः । सर्वे विष्णुरताः शुद्धाः सर्वपापविवर्जिताः ॥

त्रयीधर्मवृताः सर्वे भग्ना इन्द्रपुरोगमाः । विष्णोः समीपमागत्य भयार्ताः शरणं ययुः ॥ देवा ऊचुः । अजेयान्सर्वदेवानां तपोनिर्धूतकल्मषान् । त्वमेवैतान्महादैत्याञ्जेतुमर्हसि केशव ॥ महादेव उवाच । इत्याकर्ण्य हरिर्वाक्यं देवानां च भयानकम् ॥ तान्समाश्वास्य दिक्पालान्मामाह पुरुषोत्तमः ॥ श्रीभगवानुवाच । त्वं हि रुद्र महाबाहो मोहनार्थं सुरद्विषाम् । पाषंडाचरितं धर्मं कुरुष्व सुरसत्तम ॥ तामसानि पुराणानि कथयस्व च तान्प्रति । मोहनानि च शास्त्राणि कुरुष्व च महामते ॥ मयि भक्ताश्च ये विप्रा भविष्यन्ति महर्षयः । त्वच्छक्त्या तान्समाविश्य कथयस्व च तामसान् ॥ काणादं गौतमं शक्तिमुपमन्युं च जैमिनिम् । कपिलं चैव दुर्वासं मृकण्डुं च बृहस्पतिम् ॥ भार्गवं जामदग्न्यं च दशैतांश्च महाऋषीन् । तव शक्त्या समाविश्य कुरुष्व जगतो हितम् ॥ त्वच्छक्त्या च समाविष्टास्तमसोद्रिक्तया भृशम् । तामसास्ते भविष्यन्ति क्षणादेव न संशयः ॥ कथयिष्यन्ति ते विप्रास्तामसानि जगत्रये । पुराणानि च शास्त्राणि त्वंपरत्वेन कथ्यते ॥ कपालचर्मभस्मास्थि चिह्नान्यमर सर्वशः । त्वमेव धृत्वा तान् लोकान् मोहयस्व जगत्रये ॥ तथा पाशुपतं शास्त्रं त्वमेव कुरु सत्कृतः । कंकालशैवपाषण्डमहाशैवादिभेदतः ॥ अवलम्ब्य मतं सम्यग्वेदबाह्यं नराधमाः । भस्मास्थिधारिणः सर्वे भविष्यन्ति

ह्यचेतसः ॥ त्वां परत्वेन वक्ष्यन्ति सर्वशास्त्रेषु तामसाः । तेषां मतमधिष्ठाय सर्वे दैत्याः सदानवाः ॥ भवेयुस्ते मद्विमुखाः क्षणादेव न संशयः । अहमप्यवतारेषु त्वां च रुद्र महाबल ॥ तामसानां मोहनार्थं पूजयामि युगे युगे । मतमेतदवष्टभ्य पतंत्येव न संशयः ॥ महादेव उवाच । तच्छ्रुत्वाहं यथोक्तं तु वासुदेवेन भामिनि । समुद्विग्नमना दीनो भवाम्यत्र वरानने ॥ नमस्कृत्वाथ तं देवमब्रुवं परमेश्वरम् । त्वयोदितमिदं देव करोमि यदि भूतले ॥ आत्मनाशाय मे नाथ भविष्यति न संशयः । न शक्यं हि मया कर्तुमेतत्कृत्यं हरेधुना ॥ त्वदाज्ञापि च नोल्लंघ्या एतद्दुःखतरं महत् । एवमुक्ते ततो देवि समाश्वास्य च मां पुनः ॥ आत्मनाशो न ते वत्स भवेदित्याह मां हरिः । देवतानां हितार्थाय कुरुष्व वचनं मम ॥ तवापि जीवनोपायं कथयामि सुरोत्तम । दत्त्वान्कृपया तुल्यमात्मनामसहस्रकम् ॥ हृदये मां समाधाय जप मन्त्रं ममाव्ययम् । षडक्षरं महामंत्रं तारकब्रह्मसंज्ञकम् ॥ ये भजन्ति हि मां भक्त्या तेषां मुक्तिर्न संशयः । इन्दीवरदलश्यामं पद्मपत्रविलोचनम् ॥ शंखारिशार्ङ्गेषुधरं सर्वाभरणभूषितम् । पीतवस्त्रं चतुर्बाहुं जानकीप्रियवल्लभम् ॥ रामाय नम इत्येवमुच्चार्यं मंत्रमुत्तमम् । सर्वदुःखहरं चैतत्पापिनामपि मुक्तिदम् ॥ इमं मन्त्रं जपन्नित्यं मंगलस्त्वं भविष्यसि । भस्मास्थि-

धारणाद्यत्तु संभूतं किल्बिषं त्वयि ॥ मंगलं तद्भवेत्सर्वं मन्म-
न्त्रोच्चारणाच्छुभात् । त्वच्चित्तान्नापयास्यामि सदा सर्वसुरोत्तम ॥
मदन्यदेवताभक्तिर्जायते न तु सत्तम । मनसैवार्चय हृदि मां
नाथं पुरुषोत्तमम् ॥ मदाज्ञां कुरु मत्प्रीत्या सर्वमेतच्छुभं तव ।
इति संदिश्य मां देवि विससर्ज मरुद्गणान् ॥ विसृष्टास्ते ततो
देवा निवृत्ता मां समाययुः । ततो मां प्रार्थयामासुर्देवा इंद्रपुरो-
गमाः ॥ इन्द्रादय ऊचुः । शीघ्रं कुरु हितं देव यथोक्तं हरिणा-
धुना ॥ महादेव उवाच । देवतानां हितार्थाय वृत्तिं पाषण्डिनां
शुभे । कपालचर्मभस्मास्थिधारणं तत्कृतं मया ॥ तामसानि पुरा-
णानि यथोक्तं विष्णुना शुभे । पाषंडशैवशास्त्राणि तथैव कृतवान-
हम् ॥ मच्छक्त्यापि समाविश्य गौतमादिद्विजानपि । वेदबाह्यानि
शास्त्राणि सम्यगुक्तानि वै मया ॥ इमं मतमवष्टभ्य दुष्टाः सर्वे
च राक्षसाः । भगवद्विमुखाः सर्वे बभूवुस्तमसावृताः ॥ भस्मा-
दिधारणं कृत्वा महोग्रतमसावृताः । मामेव पूजयांचक्रुर्मांसा-
सृक्चंदनादिभिः ॥ मत्तो वरप्रदानानि लब्ध्वा मदबलोद्धताः ।
अत्यन्तविषयासक्ताः कामक्रोधसमन्विताः ॥ सत्वहीनास्तु
निर्वीर्या जिता देवगणैस्तथा । सर्वधर्मपरिभ्रष्टाः काले यान्त्य-
धमां गतिम् ॥ ये मे मतमवष्टभ्य चरन्ति पृथिवीतले । सर्व-
धर्मैश्च रहिताः पश्यन्ति निरयं सदा ॥ एवं देवहितार्थाय वृत्तिर्मे
देवि गर्हिता । विष्णोराज्ञां पुरस्कृत्य कृतं भस्मास्थिधारणम् ॥

बाह्यचिह्नमिदं देवि मोहनार्थाय विद्विषाम् । अथान्तर्हृदये नित्यं धात्वा देवं जनार्दनम् ॥ जपन्नेव च तन्मन्त्रं तारकब्रह्मसंज्ञितम् । सहस्रनामसदृशं विष्णोर्नारायणस्य तु ॥ षडक्षरं महामन्त्रं रघूणां नायकस्य च । जपन्वै सततं देवि सदानन्दसुधाप्लुतम् ॥ सुखमात्यान्तिकं ब्रह्म ह्यश्नामि सततं शुभे । एतत्ते सर्वमाख्यातं त्वया पृष्टं शुभानने ॥ किमन्यच्छ्रोतुकामासि प्रीत्या तत्परिपृच्छ माम् ॥ " इति । अत्र च भस्मादिधारणस्य वेदविरुद्धत्वं तामसजनधार्यत्वं तत्प्रतिपादकशास्त्राणामसुरजनविमोहनार्थं कृतत्वं च स्पष्टमुपलभ्यते ।

किमधिकजल्पनेन ये खलु सात्विका वैदिकाः पुरुषा ऊर्ध्वगतिकामास्तेषां तामसभस्मत्रिपुण्ड्रधारणं सर्वथा न युक्तमिति त्वनिच्छताप्यङ्गीकार्यम् । भस्मनस्तामसत्वं च भरद्वाजसंहितायां न्यासोपदेशे चतुर्थाध्याये भक्तिविरुद्धाधिकारे स्पष्टमुक्तं । " तमसो भस्मरजसो गन्धः सत्वस्य मृत्तिका । तस्माद्भस्मादिभिर्नेच्छेदैकान्तीं सिद्धिमात्मनः ॥ " इति । रौद्रव्रतादिनियतैस्तमोमोहनतान्त्रिकैः । शवेन्धनकरीषादिभस्माभिः कर्म साध्यते ॥ " इति च भस्मकरणकपुण्ड्रादिधारणस्य रौद्रव्रतादिमात्रनियतत्वमुक्तम् । स्कान्दे च—" पुण्ड्रं चतुर्विधं ज्ञेयमामरं चार्षमासुरम् । मानवं चेति कर्मज्ञैस्तत्तत्फलनिवेदिभिः ॥ " इति पुण्ड्रचातुर्विध्यमुक्त्वा " आमरं

मृत्स्नया पुण्ड्रं चन्दनेनार्षमुच्यते । भसितेनासुरं पुण्ड्रं मानवं कुंकुमादिभिः ॥ " इति मृच्चन्दनभस्मकुंकुमरूपकरणभेदेन पुण्ड्राणामामरादिसंज्ञामुक्त्वा " आमरं सात्विकं पुण्ड्रमार्षं राजसमिष्यते । आसुरं तामसं तुर्यं तथा राजसतामसम् ॥ " इति मृत्करणकस्यामरपुण्ड्रस्य सात्विकत्वं चन्दनकरणकस्यार्ष-पुण्ड्रस्य राजसत्वं भस्मकरणकस्यासुरपुण्ड्रस्य तामसत्वं कुंकु-मादिकरणकस्य मानवपुण्ड्रस्य राजसतामसत्वं च वर्णितम् । तत्रैव " सात्विकैरूर्ध्वतः पुण्ड्रमूर्ध्वं तिर्यक् च राजसैः । धार्यते तामसैस्तिर्यग्वृत्तं राजसतामसैः ॥ " इत्यधिकारिभेदेन पुण्ड्र-भेदोपि वर्णितः ॥ " ऊर्ध्वगत्यां तु यस्येच्छा तस्योर्ध्वं पुण्ड्र-मुच्यते । ऊर्ध्वं गत्वा तु देवत्वं सम्प्राप्नोति न संशयः ॥ उर्ध्वं नयति यत्पुण्ड्रं प्राणिनः पापकारिणः । तस्याख्या ह्यूर्ध्वपुण्ड्रेति तस्मात्तां धारयेद्द्विजः ॥ " इति नारदीयवचनेनो-र्ध्वगतिप्रापकस्य पुण्ड्रस्योर्ध्वपुण्ड्रनामभाक्त्वस्योर्ध्वगतिकामै-स्तस्यैव धार्यत्वस्य च लाभेन तन्न्यायेन तिर्यक्पुण्ड्रस्य तिर्य-ग्गतिकारकत्वं च तत एव हेतोस्तन्नामभाक्त्वं च लभ्यते । तथा चोर्ध्वगतिकामानां तिर्यक्पुण्ड्रधारणं सर्वथा न सम्भव-तीति सिद्धम् । इति भस्मधारणविचारः समाप्तः ।

एवं बहुप्रमाणोपन्यासपूर्वकं वैदिकब्राह्मणानां भस्मत्रिपुंड्र-धारणे शतशः खण्ड्यमाने केषुचिद्वचनेषु मूलग्रन्थेष्वेव प्रदर्श्य-

मानेषु भस्मधारणविधायकवचनेष्वपि परिहृतेषु भग्नदर्पऊर्ध्वपुण्ड्रधारणनिषेधकवचनसद्भावं वदंस्तादृशवचनानि पत्रिकायां विलिख्य प्रेषयिष्यामीति च वदन्नेव निरगात् । ततश्च द्वित्रदिवसानन्तरं कानिचित्स्वकपोलकल्पितानि निर्मूलानि च वचनानि पत्रिकायां विलिख्य तांत्स्वयमेवानयन्मध्येमार्गे रणछोडुनाम्ने पौराणिकाय तेषु वचनेषु प्रदर्शितेषु तेन च तेषां निर्मूलतायामुक्तायामस्माकं तादृशवचनप्रदर्शने भग्नोत्साहो नैव तां पत्रिकामस्मन्निकटमप्रैषयत् । अयं च वृत्तान्तो रणछोडुनामकपण्डितेनैवास्माकं ज्ञापितः । ततस्तास्मिन्नेव दिवसे स्वानागमनपरिवादपरिजिहीर्षुर्द्वित्रैः स्वकीयैः साकमस्मन्निकटमागतोभूत् । आगत्यापि न तादृशवचनकथामपि वोत्थापयामासस्म । तदनुत्थानायैव च स्वस्य न्यायशास्त्रे पाण्डित्यं तत्रापि विशेषतो व्युत्पत्तिवादे पांडित्यं चावदत् । ततश्चास्माभिस्तदीयन्यायशास्त्रपाडित्यजिज्ञासुभिर्व्युत्पत्तिवाद इत्थं प्रश्नः कृतः ।

## प्रश्नप्रकारः ।

व्युत्पत्तिवादे प्रथमविचारे घटो घट इत्यादिस्थलीयशाब्दबोधविचारस्थले गदाधरभट्टाचार्येण प्रथमं घटो घट इत्यादिस्थलेऽभेदसंबंधावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिबोधं तत्प्रयोजकसमानविभक्तिकत्वा-

दिसत्वादापादयित्वा तादृशशाब्दबोधस्याप्रसिद्धचैव नापादनं संभवतीति केषांचित्समाधानमुपन्यस्य पुनरपि द्रव्यं घट इत्यादिस्थले द्रव्यत्वे धर्मितावच्छेदकतासंबंधेन घटत्वावच्छिन्नाभेदसंसर्गावच्छिन्नप्रकारताकबोधप्रयोजकतात्पर्यज्ञानविशेषादिघटितसामंग्रीबलाद्घटत्वेपि तादृशशाब्दबोधमापाद्य नच धर्मितावच्छेदकतासंबंधेन द्रव्यत्वादौ तादृशान्वयबोधोत्पत्तिप्रयोजिका द्रव्यपदजन्यद्रव्यत्वावच्छिन्नोपस्थितितदवच्छिन्नविशेष्यकयोग्यताज्ञानादिघटितसामग्र्येव धर्मितावच्छेदकतायास्तत्कार्यतावच्छेदकताविरहेपि द्रव्यत्वादिनिष्ठायास्तत्कार्यतावच्छदकधर्मघटकत्वादित्यादिना द्रव्यत्वादौ तेन संबंधेन तादृशशाब्दबोधोत्पत्तिप्रयोजकद्रव्यपदजन्यद्रव्यत्वावच्छिन्नोपस्थितितदवच्छिन्नविशेष्यकयोग्यताज्ञानादिघटितसामग्रीविरहेण नैतादृशापादनसंभव इति पूर्वपक्षोपन्यासः कृतः। अत्र च धर्मितावच्छेदकतायाः कार्यतावच्छेदकसंबंधत्वाभावेपि कार्यतावच्छेदकधर्मघटकतामात्रेण द्रव्यपदजन्यद्रव्यत्वावच्छिन्नोपस्थितितदवच्छिन्नविशेष्यकयोग्यताज्ञानादिघटितसामग्र्या द्रव्यत्वे धर्मितावच्छेदकतासंबंधेन घटत्वावच्छिन्नाभेदसंसर्गावच्छिन्नप्रकारताशालिबोधप्रयोजकत्वमुक्तम् । धर्मितावच्छेदकतायाः कार्यतावच्छेदकसंबंधत्वाभावे तेन संबंधेन शाब्दबोधं प्रति कथं तादृशसामग्री प्रयोजिका। येन संबंधेन यादृशं

कार्यं प्रति येन संबंधेन यत्कारणं भवति तत्संबन्धावच्छिन्नतन्निष्ठकारणतानिरूपितायां कार्यतायां तत्संबंधस्यावच्छेदकताया आवश्यकत्वात् । यदि धर्मितावच्छेदकत्वं न कार्यतावच्छेदकसंबंधस्तर्हि तेन संबंधेन तादृशकार्यं प्रति न तत्कारणमिति तस्य प्रयोजकत्ववर्णनमप्यसंगतम् । यदि चात्र कारणत्वरूपं प्रयोजकत्वं न विवक्षितमपि तु कारणान्तरसहकारित्वरूपं कारणतारूपस्यात्रासंभवादित्युच्यते तदापि न निस्तारः तादृशस्यापि प्रयोजकत्वस्याऽसंभवात् । ययोः कारणयोस्स्वीयकार्यतावच्छेदकैक्यं स्वीयकार्यतावच्छेदकयोर्व्याप्यव्यापकभावो वा तद्घटकैककारणेन स्वीयकार्योत्पादने तदपरकारणस्य सहकारित्वं दृष्टम् । प्रकृते च तात्पर्यज्ञानघटितसामग्रीकार्यतावच्छेदकं घटत्वावच्छिन्नाभेदसंबंधावच्छिन्नप्रकारताकशाब्दबुद्धित्वं पदार्थोपस्थितिकार्यतावच्छेदकं च द्रव्यत्वावच्छिन्नविषयकशाब्दबुद्धित्वमिति न तयोरैक्यं न वा व्याप्यव्यापकभावः । एवं योग्यताज्ञानकार्यतावच्छेदकं द्रव्यत्वावच्छिन्नविशेष्यकघटत्वावच्छिन्नाभेदसंसर्गावच्छिन्नप्रकारताकबुद्धित्वमिति न तयोरप्यैक्यम् । योग्यताज्ञानकार्यतावच्छेदकव्यापकत्वस्योक्तसामग्रीकार्यतावच्छेदके सत्वेपि न तद्धर्मावच्छिन्नोत्पत्तौ तद्धर्मावच्छिन्नसामग्र्यास्सहकारित्वम् व्या-

प्यधर्मावच्छिन्ने जननीये सत्येव व्यापकधर्मावच्छिन्नजनकसामग्र्या अपेक्षणादिति ।

एवं पृष्टः प्रश्नार्थमप्यजानन्नाम्रान्पृष्टः कोविदारानाचक्षत इति न्यायेन द्रव्यं घट इत्यादिस्थलीयसामग्र्या घटो घट इत्यादिस्थले शाब्दबोधापादकतामुपपादयिष्यंस्तत्स्थलीयाकांक्षाज्ञानस्यात्रापि सत्वं वदन् यत्पदस्य यत्पदाभावप्रयुक्तो हि यादृशशाब्दबोधजनकत्वाभावस्तत्पदे तत्पदवत्त्वमाकांक्षेत्याकांक्षालक्षणं चानुवदन् द्रव्यं घट इति स्थले द्रव्यपदं घटपदवदित्याकांक्षाज्ञातस्य धर्मितावच्छेदकतासंबंधेन द्रव्यत्वे तादृशशाब्दबोधं प्रति धर्मितावच्छेदकतासंबंधेन कारणतां च वदंस्तादृशाकांक्षाज्ञाननिरूपितधर्मितावच्छेदकताया द्रव्यत्वे सत्वं चावर्णयत् । ततश्चास्माभिस्तदीयवाग्जाले शतशः खण्डिते भक्षितार्द्रक इव वानरो दिङ्मूढतामापन्नो "भक्ष्याशयाहिमंजूषां दृष्ट्वाखुस्तेन भक्षितः" इत्युक्तरीत्या स्वपाण्डित्यद्रढीकरणाय प्रस्तुते न्यायशास्त्रविचारेपि भग्नो निरुत्तर एव निरगात् । सत्येवमयं तुलारामनामा निर्लज्जस्वकीयगोष्ठ्यां भस्मधारणनिषेधकवचनेषु स्वेन पृष्टेष्वस्माभिरुत्तरमेव न दत्तमिति प्रलपतीति कैश्चिदवंतिकापुरागतैरावेदितवृत्तान्ता वयमेतदीयदौर्जन्यप्रकाशनार्थमिमां पत्रिकां प्रकटीकुर्मः । पश्यत निर्मत्सराः पण्डिता एतदीयं पांडित्यम् । विद्यार्थिनं प्रति कर्तव्य एव प्रश्न एतेन

सह वादप्रतिवादादिकं कर्तुं युक्तं न वेत्येतदीयन्यायशास्त्रपरिचयजिज्ञासयैवास्माभिरेनं प्रति कृतोभूत् तत्रैवायं निरुत्तरोभूत् । न केवलं निरुत्तरं एव किन्तु विपरीतमपि प्रलपितुमारेभे । प्रलपत्वयं यथेच्छं तावता न काचिदस्माकं क्षतिः । कियन्तो न सन्ति श्वानो रथ्यायां रटन्तः । नहि । दिवान्धकथनमात्रेण सहस्रभानुरिंगालसमच्छायः स्यात् । तस्मादलमियदेवैतदीयापाण्डित्यं ज्ञापयितुं पंडितानामिति विरम्यते ॥ इति ॥

---

१८।६।१५

पुस्तक मिलनेका ठिकाना–
गंगाविष्णु श्रीकृष्णदास,
' लक्ष्मीवेंकटेश्वर ' छापाखाना,
कल्याण–मुंबई.

# जातकसंग्रह भाषाटीकोपेत ।

संसारमें विशेषकरके उसी ग्रंथका समादर है जो कि अपने सजातीय ग्रंथोंमें साररूप है क्योंकि कालचक्रकी विकराल गतिसे अब वह समय नहीं है, जिसमें समस्त शास्त्रोंके रहस्यके जाननेकी बुद्धि शक्ति सामर्थ्य प्रागल्भ्य धारणा दीर्घायुरूप सामग्री प्राप्त हो, आधुनिक समयके मनुष्य प्रथम तौ अल्पायु होते हैं तिसपरभी अनेकानेक रोगभय फिर बहुधा विघ्न इतनेपरभी दुर्भाग्य और बुद्धिहीनता आदिसे संकुचित होते चले जाते हैं, फिर कहिये समस्त शास्त्रोंका तत्त्वज्ञान एक व्यक्तिमें किस प्रकार आ सक्ता है इसी कारण समस्त जातकग्रंथोंसे सार २ लेकर जिन विचारोंकी कि जन्मपत्रफल, देशमें आवश्यकता होती है वह सबही समस्त जातकग्रंथोंसे लिखे गये हैं जैसे प्रथमभावके विचारमें रूप, वर्ण, चिह्न, जाति, आयु, सुख, दुःख इत्यादि; द्वितीयभावके विचारमें धन, सुख, नेत्रावयव इत्यादि; तृतीयभावके विचारमें भ्रातृपराक्रम इत्यादि; चतुर्थभावके विचारमें गृह, ग्राम, चतुष्पदवाहन, भूमि, मित्रमातृपितृसुख इत्यादि; पंचमभावके विचारमें रोग, शत्रुपीडा इत्यादि सप्तमभावके विचारमें जाया, व्यापार, गमन आगमन इत्यादि; अष्टमभावके विचारमें दुर्ग, अल्प, कष्ट मरणहेतु इत्यादि; नवमभावके विचारमें भाग्य, तीर्थ, धर्मसंबंधि कार्य इत्यादि; दशमभावके विचारमें, राज्य, मुद्रा, व्यापार

राजमान, महत्पद, पितृसुख इत्यादि; एकादशभावके विचारमें गज, अश्व, सुवर्ण, वस्त्र लाभालाभ इत्यादि; द्वादशभावके विचारमें हानि, दान, व्यय, कपट इत्यादि विषय प्रसिद्ध २ जातकग्रंथोंके प्रमाणसे संगृहीत हैं इसके अतिरिक्त पंचमहापुरुषलक्षण और चौरासी योग और सब प्रकारके राजयोग प्राचीन महर्षिप्रणीत जातकग्रंथोंसे लिखे गये हैं, कोई विशेष बात छोडी नहीं गईहै जो अन्य जातकग्रंथोंमें पाई जावे। यह ग्रंथ मूलमात्र तौ छपही चुका था परन्तु इसमें सर्वत्र गूढ २ अर्थ होनेसे भाषाटीकासहितकी विशेष माग आनेके कारण द्वाढौलिग्रामवास्तव्य पंडितवर्य ज्योतिर्विद् काशीरामजी पाठकद्वारा सुललित हिन्दीभाषाटीका इस रीतिसे कराई है कि प्रथम मूलार्थविवरण नीचे मूल श्लोक फिर हिंदी अनुवाद विराजमान है। उक्त टीकाकार महानुभावनेभी केवल अपनीही बुद्धिसे नहीं किन्तु मूलपरिशोधनपूर्वक अन्य जातकमतोंसे सामानाधिकरण्यसे टीकाकी रचना की है। मैंनेभी ग्राहकसज्जनोंके प्रमोदार्थ सुन्दर टाइप और ग्लेज कागजपर छापकर तैयार किया है। दाम २॥ रु.

## गोविंदशतक.

भक्तजनानन्ददायक सर्वजगन्नायक श्रीराधारमणविहारी मायामनुजतनुधारी करुणावरुणालयके निकट पूर्वार्द्धमें विनय तथा उत्तरार्द्धमें सुललित लीला वर्णित है. की० १ आ.

# भजनरत्नावली बडी।

आस्तिक हिन्दूलोग सब देवतोंकी उपासना बडी भावभक्तिके साथ किया करते हैं, सब देवताओंकी उपासनाको वे लोग ईश्वरकी उपासनाका एक अंगही मानते हैं । अतएव एक ऐसे बृहत् ग्रन्थकी आवश्यकता थी कि जिसमें ईश्वर एवं अन्य सब देवताओंकी सर्वांगपूर्ण उपासनाके उत्तमोत्तम पदाकों संग्रह हो । इसी लिये हमने इस अभिनव भजनरत्नावलीको बहुत मोटे २ अक्षरोंमें छापके प्रकाशित किया है। प्रभाती, शयनके पद, रागभोग, हिंडोले, झूलने, फाग, अनुराग, आरती, जितने विषयोंके अनूठे पदोंका समावेश इस ग्रन्थमें किया गया है उनका उल्लेख इस छोटेसे विज्ञापनमें नहीं हो सक्ता। हां, हम इतना अवश्य कह सक्ते हैं कि साधु महात्मा सन्त महन्त और भक्त प्रत्येक देवताकी उपासनासंबंधी प्रत्येक विषयके पद इसमें अवश्य पावेंगे। क्योंकि संग्रहकर्त्ता महाशयने ग्रन्थ क्या बनाया है ? सचमुच सागरको गागरमें भर दियाहै। इसकी मांगके लिये अभीसे सैकडों पत्र हमारे पास आ गये हैं, और नित्यही धडाधड आ रहे हैं, इसीसे हम इसके ग्राहकोंको शीघ्र खरीदनेका अनुरोध करते हैं। मूल्य १॥ रु.

---

पुस्तक मिलनेका ठिकाना—गंगाविष्णु श्रीकृष्णदास,
लक्ष्मीवेंकटेश्वर छापाखाना कल्याण—मुंबई.

# इंग्लिश टीचर.

आजतक धनी साहूकार और व्यापारियोंका कार्य बहुतायतसे अंग्रेजोंके साथ रहताहै परन्तु अंग्रेजी न पढे रहनेके कारण उनके साथ वार्तालापादिमें मुँह ताकते रहजाते हैं और घरके कामोंकी अधिकतासे वे अपने बालकोंको पाठशालामें भेजकर अंग्रेजीकी उचित शिक्षाभी नहीं दे सकते हैं इसलिये यह पुस्तक उन्हींके लाभार्थ बनाई है कि घरमेंही विना शिक्षकही तकियेके सहारे पडे पडे यदि एक एक शब्दभी प्रतिदिन याद कर लियाकरें तो बिलकुल पराधीनही न रहे इस पुस्तकके याद करलेनेसे बातचीत करना तार लिखना पढना आदि आवश्यकीय बातें आसकती हैं। जिल्दकी बंधीहुई पुस्तकका दाम १। रु. है.

---

पुस्तक मिलनेका ठिकाना—गंगाविष्णु श्रीकृष्णदास, लक्ष्मीवेंकटेश्वर छापाखाना कल्याण—मुंबई.